Tel : "Samskrutam"        दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १२ | 15 th MARCH 1975 | क्रमांकः ३



आनन्द-फाल्गुणाङ्कः    शकाब्दाः १८९६    मूल्यम् ०–५० पैसाः

# विषयसूचिका









# शिवस्तुतिः

## रचयिता – श्री नागपूडि. कुप्पुस्वाम्यार्यः



गौरीश चन्द्रशेखर गङ्गाधर नीलकण्ठ शिव शम्भो ।
शर्व महेश्वर शङ्कर गिरिश महादेव पशुपते पाहि ॥

पुरमथने स्मरदहने जितनिधने वह्निसूर्यशशिनयने ।
अनुकम्पाभूरिधने त्रिलोचने सर्वदास्तु मे हृदयम् ॥

दक्षमखध्वंसाय त्र्यक्षाय विपक्षहननदक्षाय ।
उक्षगमनाय सेवितृरक्षणदीक्षाय ते नमस्कुर्मः ॥

अपवर्गकारिणी खलरिपुवर्गमदापहारिणी शम्भो ।
मच्चित्तचारिणी तव चरणे भक्ति निरन्तरा मेऽस्तु ॥

नित्यं विषाद्यपि त्वं न कदाचन मां विषादिनं कुर्याः ।
दोषाकरप्रियोऽपि त्वं मां दोषाकरप्रियं न कुरु ॥



# सम्पादकीयम्

## द्वेष्योऽपि सम्मतश्शिष्टः . . .
## त्याज्यो दुष्टः प्रियोऽपि . . .

प्रतिपक्षप्रविष्टोऽपि यो जनः शिष्टः भवेत्, नाम नीतिपरः, अवञ्चकः, देशाभ्युदयकांक्षी च भवेत, सोऽत्यन्तं पालकानां नायकानां सम्मत एव भवेत् । यतः तस्याऽभिप्रायाणां श्रवणेन, आचरणेन च, देशस्य क्षेमं भवति । यथा आर्तस्य औषधसेवन मनिष्टमपि शरीरसौख्याय अवस्यकरणीयं भवति, तद्वत् । प्रियोऽपि अर्थात् यः कोऽपि स्वपक्षीयोऽपि दुष्टश्चेत् नाम वञ्चनापरः, अन्याय्यकारी, अक्रमव्यापारिणा मनुकुलः, स्वार्थपरायणः, देशद्रोहकार्यकर्ता च भवेत् सोऽत्यन्तं त्याज्य एव । यथा स्वशरीरांगमपि दुष्ट मुपेक्षितं चेत् सकलस्याऽपि शरीरस्य नाशोऽवश्यं भावी तद्वत् । यथाकथंचित् पालकै मनसि देशस्य, प्रजानाञ्च अभिवृद्धिः, सौख्यं च निधाय स्वपरपक्षभेदमुत्सृत्य सर्वै रभिज्ञैः, न्यायपरैः, अवञ्चकैः परार्थप्रवणैः अनुभवज्ञैः, सम्मन्त्रः कार्य एव । "ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि" इति वचनानुसारतः सकलार्थविदप्येकः कार्यनिर्णये सन्देहं प्राप्नोत्येव । अतः परेषा मुचितज्ञानामपि आशयसंश्रवण मत्यन्त मुचितमेव भवति । इदानी मस्माकं देशे अविनीतिः, अन्याय्यः, अक्रमव्यापारः, निर्हेतुकं नित्यावसरवस्तूनां मूल्याधिक्यं, दारिद्र्यं, निरुद्योगिता, अशान्तिः, पालकेषु अनैकमत्यं इत्यादीनि

बहूनि वर्तन्त इति सर्वेषां विदितमेव ।

अपिच केन्द्रीयार्थिकमन्त्रिणा श्रीसुब्रह्मण्यमहाशयेन समर्पितमधिकीकृतकरग्रहणविधानं च दुर्भरमिव भाति, माध्यमिकजनानां नातिभारोऽयं नूतनकरः (Tax) इति तेनार्थिकमन्त्रिणा, अन्यै स्तत्पक्षीयै रप्युच्यते विलासवस्तुकरः (Tax) अधिकीकृतः । तस्य भावस्तु माध्यमिकजीवना मनुजा स्सर्वात्मना विलासवस्तूनि न लभेरन् इतीवाऽऽभाति । अस्माकं भारते प्रतिवर्षं अर्थस्य ह्रासतैव ज्ञाप्यते, न कदाऽप्यभिवृद्धिः । सामान्यजनोपयोगिवस्तुषु विषये आर्थिकमन्त्रिणा दया परिदर्शिता । सार्वजनीनतयोपयुज्यमानेषु बीडी (Beedi) तमाखु (Tobacco) इत्यादिषु दाक्षिण्यं परं प्रदर्शितम् । केशान् विना सकलस्याऽपि वस्तुनः करः विहित इति छलोक्त्या आन्ध्रराष्ट्रशासनसभ्यः (एम्. एल्. ए.) कश्चन व्याख्या मकरोत् । नित्यावश्यकवस्तूनां मूल्य मल्पीभवतीति भ्रमात्मकं ज्ञान मस्मत्पालकान् आविशति । चलनचित्रनटकाग्रेसराः केचन पुरुषाश्च, काश्चन स्त्रियश्च स्वेषु विहितं लक्षशः कर मप्रदाय सङ्घे मान्यता मेव प्राप्नुवन्ति । नूतनकरणां सृजनं, शासनकरणं च सुलभमेव प्रभुत्वस्य, किन्तु तदनुगुणतया तेभ्यः महापुरुषेभ्यः शासनानुगुणतया करग्रहण मसाध्यं वर्तते, यत्तु अतीव चिन्त्यं, अपमतिकारणञ्च । परिपालनासैलभ्याय राष्ट्राणामानन्त्य मावश्यकमिति केचन तर्कयन्ति । पालनासौष्ठवाय राष्ट्राणा मितोधिकाऽधिकारान् केचन कांक्षन्ते । स्थिति रिदानी मस्तव्यस्ततया दृश्यते । बीहारसमस्या नाद्यापि परिष्कृता । तस्मा दग्रनायका दैशिकवैदेशिकवृत्तान्तं साकल्यमधिगत्य, एतासां क्लिष्टपरिस्थितीनां निवारणाय सहसोपाय आलोचनीयः । तदर्थं काचन महासभा प्रचालनीया । तस्यां

सभायां सपक्षविपक्षाग्रनायकानां मेधाविनाञ्च प्रवेशो दातव्यः। अपि च तेषां निष्पाक्षिकनिरुपद्रवनिष्कण्टकभाषणानि श्रोतव्यानि। परस्पराभिप्रायावगाहनपुरस्सरं देशीयसकलविधक्लिष्टता निवारणाय सर्वानुमतं काचन प्रणाळी, अंगीकार्या। अंगीकृतप्रणाल्यनुसार माचार अत्यन्तावश्यकः। एवं कृते देशस्य-प्रजानां च इतोधिका शुभा स्थितिः भूयादिति विश्वासः।



---

## किमेतत्पदं ब्रूहि बालक !



वर्णत्रयात्मकं किञ्चन पदं अलङ्कारेष्वन्यतमस्य नाम भवति। तस्यैव पदस्य मध्यमाक्षरलोपे पार्वतीत्यर्थः ज्ञायते। आद्योभयाक्षरलोपे सति, लक्ष्मीरित्यर्थः लक्ष्यते।

---

श्रीः

# श्रीमंगलादेवी मंगलसुप्रभातम्

पण्डितरत्नं रामाचार्य, गैलगली

गङ्गातरङ्गपटलीलसितोत्तमाङ्ग-
स्यार्धाङ्गभाग्यभरितेऽयि महेश्वरस्य ।
श्रीमङ्गलप्रदतयाऽन्वितनामधेये
श्रीमङ्गले गिरिसुते तव सुप्रभातम् ॥

भर्ता शिव स्त्वमपि सर्वसुमङ्गलाऽसि
सिद्धिप्रदस्सकलविघ्नहर स्सुत स्ते ।
क्षेमं करोऽन्यतनयोऽसुरतारकारिः
श्रीमङ्गले .... .... .... ॥

मात स्सदा तव निवासमहामहिम्ना
बाभाति मङ्गल मभङ्गुर मादधाना ।
रम्या पुरी प्रथितमङ्गलनामधेया
श्रीमङ्गले .... .... .... ॥

वङ्गाभिदक्षितिपपुङ्गवभक्तितुष्टे
सानुग्रहं विभवदे कदलीवनेऽम्ब ।
शृंगारकेलिरसिकेऽलमनङ्गजेत्रा
श्रीमंगले .... .... .... ॥

भर्गप्रिये, जननि, भार्गवरामगीते
दुर्गे निसर्गसुभगे हृतभक्तदुर्गे ।

स्वर्गांगनामधुरगीतहृतान्तरंगे
श्रीमंगले .... .... .... ॥

पर्णाशनै र्मुनिभि रादरवर्णनीय-
लीले सुपर्णगमनाच्युतभक्तिभाग्भिः ।
पूर्णेन्दु माननरुचा जितवत्यपर्णे
श्रीमंगले .... .... .... ॥

अम्बाम्बिकेऽम्बुरुहडम्बरहारिनेत्रे
श्रीत्र्यम्बकप्रियकुटुम्बिनि कम्बुकण्ठि
लम्बोदरप्रसविनि स्वजनावलम्बे
श्रीमंगले .... .... .... ॥

भृङ्गालके भृगुनुते करुणातरंगा-
पांगेक्षणे दुरितसंघसमूलभंगे ।
उत्संगभासुरशुभांगि सुधांशुमौलेः
श्रीमंगले .... .... .... ॥

प्राणप्रिये पशुपतेः पशुबुद्धिलोक-
मुद्धर्तु मेव पदपङ्करुहप्रपन्नम् ।
मात र्हिताय वसुधाविहितावतारा
श्रीमंगले .... .... .... ॥

शर्वाणि सर्वसुखदे भजतां जनानां
सर्वै स्सुपर्वभि रभिष्टुतदिव्यकीर्ते
पर्वेन्दुगर्वहरकान्तिमुखारविन्दे
श्रीमंगले .... .... .... ॥

मत्तासुरत्रिपुरभञ्जनमञ्जुनाथ-
मृत्युञ्जयप्रणयरञ्जनमञ्जुवाणि ।
सिञ्जाननूपुरपदे नवकञ्जनेत्रे
श्रीमंगले .... .... .... ॥

विन्ध्याचला दुपगते सदनुग्रहार्थं
वन्ध्यांगनाजनसुताप्तिसुखप्रदाने ।
सन्ध्यानटद्गिरिशताण्डवनृत्यगाने
श्रीमंगले .... .... .... ॥

आविर्बभूव भवती भवतीव्रताप-
पापापनोदनकृते हि पुरा शिलायाम् ।
सुव्यक्तसुन्दरतनु र्भवबल्लभे त्वम्
श्रीमंगले .... .... .... ॥

वाचाल माकलयसे जड मेडमूक-
मन्धांश्च सूक्ष्मकणदर्शनदक्षदृष्टीन् ।
सातंकरंकमचिरं कुरुषे धनेशम्
श्रीमंगले .... .... .... ॥

त्वत्सन्निधानमहिमातिशयेन धान्य-
धन्यस्सदा ह्यतुलतौलवरम्यदेशः ।
राराज्यते विपुलसम्पदपारभव्यः
श्रीमंगले .... .... .... ॥

वाराहरूपहरिनेत्रसरोजजन्म-
नेत्रावती सरिदुपेतकुमारधारा ।

स्रोतस्विनी वहति तेऽद्य निषेवणार्थम्
श्रीमंगले .... .... .... ॥

पापावहीप्रहरणे चरणाम्बुजे ते
नूनं तनोति नमनं शमनं विपत्तेः ।
सन्मंगलप्रसवने भुवनेशमान्ये
श्रीमंगले .... .... .... ॥

संकीर्तनं विभवकीर्तिदमार्तिहारि
संसेवनं सवनकोटिफलप्रदायि ।
स्याद्ब्रह्मवर्चसविवर्धकमर्चनं ते
श्रीमंगले .... .... .... ॥

वन्दामहे जननि ते चरणारविन्दे
मन्दारभूरुहसमे दृढभक्तिभाजाम् ।
मन्दाकिनीप्रियसखि स्मितसुन्दरास्ये
श्रीमंगले .... .... .... ॥

त्वत्सेवकेषु नितरां करुणां विधत्से
वत्सेषु वत्सलधियं जननीव धत्से ।
दत्सेऽमितं सुख मलं परिपूरितेच्छे
श्रीमंगले .... .... .... ॥

आधीर्निवारयसि सेवकभक्त्यधीना
व्याधीः परीहरसि पापचयाद्युपाधीन् ।
साधीयसीं च धिषणां सुखदां ददासि
श्रीमंगले .... .... .... ॥

विद्वत्कृपालुपलिमारुमठेशविद्या-
मान्यव्रतीन्द्रबुधमान्यतमाज्ञयेमाम् ।
श्रीमंगलागिरिसुतास्तुतिमातनेच्छी
रामः कविर्गलगलीत्युपनामधेयः ॥

दूरीरोति दुरितानि दुरन्तहेतून्
स्फारीकरोति सुकृतानि सुखोदयानि ।
द्वारीभवत्यमरतोपगमाय नृणाम्
श्रीमंगलाशिवसतीस्तुतिसुप्रभातम् ॥

श्रीमंगलाशिवसती स्तुतिसुप्रभात-
मुद्रिक्तभक्तिमनसा पठितं प्रभाते ।
आयुस्समस्तदिवसान् वितनोति तुष्टि-
प्रेष्टार्थसृष्टिपरिपुष्टिशुभप्रभातान् ॥

क्षत्रान्वयक्षयकृता प्रभुभार्गवेण
क्षोणीसुरार्पितसमस्तवसुन्धरेण ।
निस्सारिताब्धिनवपावनदेशवासि
श्रीमंगले .... .... .... ॥

श्रीपावमानिमुनिमध्वगुरोः प्रसन्न-
श्रीकृष्णधामविलसत्कलधौतपीठे ।
स्नेहेन तन्निकटमंगलपत्तनस्थे
श्रीमंगले .... .... .... ॥

कोविदपरीक्षायां सर्वाधिकांकान् सम्पादयत !

## रजतपतकबहूकृतिं स्वीकुरुत !!

तिरुपतिनगरात् श्री नेम्मानि वेंकटरमणार्यः (आन्ध्रोपन्यासकः, यस्. वि. कलाशाला) लिखति –

यो विद्यार्थी कोविदपरीक्षां सर्वप्रथमतया उत्तरति, तस्मै स्वपितुः श्री नेम्मानि सुब्बार्यस्य स्मृतिचिह्नतया राजतं पदकं सं. भा. प्र. सभाद्वारा दीयत इति । यदि द्वौ विद्यार्थिनौ समांकान् सम्पादयेतां, तदा लाटरीविधानेन अन्यतरस्मै दीयत इति च ।

अहो! महानादरः संस्कृतभाषाव्याप्तिविषये ।

# अभिनववासवदत्ता

कर्ता – की. शे. वट्टिपल्लि नरकल्ठीरवशास्त्री

पूर्वानुबन्धः ]

आश्रयति जीवनायक मिव सुभगंजीवनायक न लोके ।
म्रदिमाकरेण ललिता करेण सम्पूर्णचन्द्रवदना सा ।। ७३ ।।
अथ जगदामुमुदे च श्वेतद्वीपान्तरे निविष्टमिव
दुग्धर्णवमग्न मिव स्फाटिकसदनप्रविष्टमिव ।। ।। १७४ ।।
अथ विघटमानदलपुटकैरवमधुबिन्दुपानमुदितानाम् ।
मदमधुकरनिकराणां कलकलनादेन मुखरितदिगन्ते ।।१७५।।
ज्योत्स्नापानभरालसचकोरमिथुनाभिनन्दितागमने ।
रतिखिन्नपुलिन्दवधूस्वेदाम्बुकणापहारनिष्णाते ।। १७६ ।।
मलयाचलसम्भूते मृदुवाते वाति सह तमालिकया ।
वायवदत्तानगरं ययतुः कन्दर्पकेतुमकरन्दौ ।। ।। १७७ ।।
तदनु प्रविश्य नगरी त्रिभुवनरमणीयमेकदेशगतम् ।
ऐक्षत वासवदत्ताभवनं भवनन्दनप्रभावस्सः ।। ।। १७८ ।।
मृदुलपवमानकम्पितगगनद्रुमपुष्पमञ्जरीभिरिव ।
कलितं पताकिकाभि र्गगनपुरश्री प्रतर्जिनीभिरिव ।।१७९।।
शिखरगतमौक्तिकौघच्छलेन पुरयुवतिदर्शनोपगतम् ।
उडुगण मिवोद्वहद्भिः प्रासादै श्शोभमानमसमानैः ।।१८०।।
बहुकृष्णागरुधूपैः प्रदर्शिताकालजलदसन्नाहम् ।
गम्भीरमुरजनादै राहूतप्रमदबर्हिणव्यहम् ।। ।। १८१ ।।
निधिमिव कौतुकरासेः कुलगृह मिव सकलविभ्रमौघस्य ।
आस्थान मिव सुमेषो रुत्पत्तिस्थान मिव च मञ्जिम्नः ।।

द्रवसि द्रवसिद्धे रिह चपला च पलायते किमित्येषा ।
अनभिहिताप्ययि मुग्धे स्तबक स्तबकर्णतः पतितः ।। १८३ ।।
त्वमसि सुकपोलरेखे सुरया सुरयाचितासुरेखेश्रीः ।
मत्ते स्मर माह्वयसे कलहे कलहेमकाञ्चिकाक्वणितैः ।।१८४।।
सखि मलये मलयेष्सित मधुनाऽधिगताऽसि कुरु दृशैवत्वम् ।
त्रपते त्रपतेयमिति स्खलितवती नागकुसुमहरणेषु ।। १८५ ।।
अङ्ग मनङ्गशराणां वहती वहतीरनंगलेखेते ।
मौक्तिकहारलतेयं विहिता विहिताय ते च परम् ।। १८६ ।।
उत्कलिके सोत्कलिके वदने वद नेत्रपंकजोल्लसिते ।
उपयाति किमुपमानं संपूर्णः पार्वणेन्दुरपि ।। ।। १८७ ।।
मन्ये सखि, काऽपि पुमान्वसतीव स तीव्रते तव स्वान्ते ।
वाचः किलाऽनुभूताश्शतधा शतधारसारास्ते ।। ।। १८८ ।।
केरळि केरळिते तव करकाकरकालमेघखण्डतुलाम् ।
उपयाति कचकलापो विकसितमल्लीस्रगाकलितः ।। १८९ ।।
कुटिलासितकुन्तलिके कुन्तलिके कर्णमधुरगम्भीराः ।
न च संगीतध्वनयः पुरगोपुरगोचरा निशाम्यन्ते ।। १९० ।।
सुरते सुरते स्तनता स्तनताडनजं सुखं यदनुभूतम् ।
स्मरता स्मरतापहर तत्केन तदा वियुक्तासि ।। १९१ ।।
स्मरजन्यां स्म रजन्यां नखराणां नवनिशातनखराणाम् ।
कुरुते कुरु तेन रुजं धन्यतमा युवतिमण्डले त्वमसि ।।१९२।।
कल्पय कुरंगिके त्वं दुर्वाकूरं कुरंगशावेभ्यः ।
कारय किशोरिके त्वं किशोरकं प्रत्यवेक्षणं सहसा।। ११३ ।।
तरळय परं तरळिके, कृष्णागुरुधूपपटलमुद्दामम् ।
कर्पूरिके, विलेपय कर्पूररजोव्रजेन कुचभारम् ।। १९४ ।।
मानय मातंगशिशो र्गमनं मातंगिकेऽतिकमनीयम् ।
अयि सखि! लिख शशिलेखे, शशिलेखां मम ललाटपट्टे त्वम्।।

"श्रीमज्जैय्यटगेहिनी सुजठरात् जन्माप्य ।
............ शिवपुरीं गत्वा प्रपठ्यादरात् ।।

.... .... .... .... .... .... .... .... .... .... .... .... .... ....

श्रीमान् कैय्यट उव्वटौ ह्यवरजौ ............ ।
भाष्याब्धि निगमं ....... अनुव्याख्याय ....... ।।"

अनेन स्पष्टं भवति किमिति तेत् मम्मटाचार्याः जय्यटानां पुत्ररत्नमिति, वाराणशी मागत्य शास्त्राध्ययनं कृतवन्तः इति तेषा मनुजौ कैय्यटोव्वटौ इति, तौ यथाक्रमं व्याकरणे वेदे च पण्डितौ इति ! तेन भीमसेनेनैव मम्मटाचार्या नधिकृत्य, एते वाग्देव्यवताराः पुरुषरूपेण काश्मीरदेशे अवतीर्य काव्यप्रकाशस्य सूत्रवृत्त्योः रचना मकुर्वन्निति चोक्तम् ।

किन्तु कैय्यटः तेषा मनुजः भवतु नाम । तत्तथैवास्तु । उव्वटः तावत् चेषा मनुजः न । उव्वटः स्वयमेव, स्वेन कृतवाजसनेयसंहितायाम् ।

"........................ वज्रटाख्यस्य सूनुना ।
........................ भोजे पृथ्वीं प्रशासति ।।"

इति अवदत् । तस्मात् उव्वटस्य पिता न जैयटः किन्तु वज्रटः अपि च भोजमहाराजस्य समकालीनः उव्वटः इति ज्ञायते । एवं स्थिते भोजस्योत्तरवर्तिनां मम्मटाचार्याणा मवरजः इति कथं संगच्छेते ?

मम्मटाचार्याः भोजस्योत्तरकालवर्तिनः इत्येतस्मिन् विषये काव्यप्रकाशस्य दशमोल्लासे, उदात्तालङ्कारस्योदाहरणभूतः ।

"........................................................................
........................................................................
........................................................................
.................... **भोजनृपते स्तत् त्यागलीलायितम् ।।"**

इति श्लोकः एव साक्षी। यथा कथंचित् एतान् भोजस्य समकालीनाः इति अङ्गीकुर्मः। किन्तु उव्वटस्तु एतेषा मनुज इतीदं न अङ्गीकार्यम्।

कैयटस्तु मम्मटाचार्याणां कनिष्ठभ्राता एव। तेनैव **"कैयटो जैयटात्मजः"** इति उक्तम्।

वाराणशी मागत्य अध्ययनं कृतवन्तः मम्मटाचार्याः इत्येषोपि ऊहः एव। दण्डिनं, राजशेखरं, भोजं विना सर्वे आलङ्कारिकाः काश्मीरीयाः एव। एते त्रयः अपि न काशीवासिनः। न कोऽपि प्रसिद्धालङ्कारज्ञः काशीवासी तस्मिन्नवसरे, एतावता वाराणशी साहित्यालङ्कारशास्त्रदृष्टौ न तावतीं प्रसिद्धिं गता यतः साहित्यालङ्काराचार्याः मम्मटाचार्याः पण्डितसहितस्वदेश मुत्सृज्य अत्रागत्य अध्ययनं कृतवन्तः इति।

काव्यप्रकशस्य कर्तारः मम्मटाचार्याः इत्यत्रापि भिन्नाभिप्रायाः सन्ति। केचित्; अस्मिन् ग्रन्थे, विद्यमानानि सूत्राणि भरतमुनिना कृतानि, केवलवृत्तिः मम्मटाचार्यैः इति। केचित्; मम्मटाल्लटौ एतस्य कर्तारौ न केवलं मम्मटाचार्याः; इति। केचित्; एतौ द्वौ मिलित्वा आमूलाग्रं विरचितवन्तौ इति। केचित्, परिकरालङ्कारावधि मम्मटाचार्यैः कृतः शिष्टः अल्लटकृतः इति च केचित् अभिप्रायाः।

यत् यथा भवतु एषः विषयः काव्यप्रकाशे स्थितेन चरम-श्लोकेन स्पष्टः एव । मम्मटाचार्येभ्यः अतिरिक्तः द्वितीयः कश्चित् एतस्य ग्रन्थस्य रचनायां साहाय्यं कृतवान् इति । एष श्लोकः ।

**"इत्येष मार्गो विदुषां विभिन्नोप्यभिन्नरूपः प्रतिभासते यत् ।**
**न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता सङ्घटनैव हेतुः ॥"**

---

# त्वं रक्ष रक्षाऽधुना

बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

पातुं ज्ञानजलं सरित्पतिममुं संसाररूपं गतः
किं त्वत्र स्खलितः पुनर्निपतितोऽगाधेति भीषावहे ।
यादोभि र्मुहुरत्र भीषणतमैः कामादिभिः पीडितः
हे गङ्गाधर रक्षकोऽस्ति मम नो त्वं रक्ष रक्षाधुना ॥

संसारं गहनं वनं त्वधिगतः मुक्तिस्वरूपं फलम्
लब्धुं भो स्सहसा शरारुनिवहैः लोभादिभि र्भीषणैः ।
आक्रान्तोऽत्र च विस्मृतो निजगतिं कर्तव्यमूढोस्मि
शम्भो नो शबराधिपास्ति शरणं त्वं रक्ष रक्षाधुना ॥



# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

देहपरिश्रमं विना मानवस्यात्र जगति जीवितुं अधिकार एव नास्तीति महात्मा गांधिमहोदयस्याशयः । दैहिकप्रयासः स्वावलम्बनस्य सोपानमिति सोऽनवरतं सम्भावयति स्म ।

अत एव दक्षिण-आफ्रिका निवाससमये महात्मा 'फिनिकालिनं नामकं कृषिक्षेत्रं क्रीत्वा तत्र स्वयमेव कृषिकर्म श्रद्धया करोति स्म । तस्य श्रमदीक्षा समेषा मुत्साहदायिन्यासीत् । अरुणोदयादारभ्य आसायं तस्य कार्यप्रवाहः प्रचलति स्म । धान्यपेषणं, पादूस्सीवनं, काष्ठछेदन-तक्षणादीनि सर्वाण्यपि कर्माणि स्वयं निर्वाहयति स्म ।

एकदा आश्रमवासिनः कस्यचिद्बालः सहसा रोगग्रस्तोभूत् । तस्योपचारभारोऽपि महात्मनः मूर्धन्यपतत् ।

सन्ध्यासमयः । पश्चिमदिगन्ते सन्ध्यारुणः भास्करः विशालविश्वस्य परिचर्यां कृत्वाऽस्ताम्बुधिं गाहमानोऽस्ति । अखिला अपि आश्रमवासिनः प्रार्थनासभां समाविशन् । महात्मा पद्मासने नेत्रे निमील्य भगवद्ध्यानमग्नोऽभूत्' किमाश्चर्यम् । तस्यांके रुग्णः शिशुरपि राजते । प्रार्थनायाः पूर्वमेव स्कन्धारूढं तं कथं वा सः त्यक्तुं समर्थः? स तु स्कन्धे मातुरंक इव सुखं निद्राति स्म । भगवद्ध्यानस्य पवित्रावसरेऽपि तं भूमौ शाययितुं गान्धी नाशशाक' करुणाकवलितं तस्य चित्तमचिन्तयत् 'यदि बालोऽसौ भूमिशायी क्रियते तर्हि अवश्य मस्य निद्राभङ्गो जायेत' इति ।

अनन्ताकाशाधः पवित्रोरुमध्ये मुग्धं बालमेकं धृत्वा भगवत्प्रार्थनामग्नस्य बापूजीमहोदयस्य दर्शनम् सुकृतिनामेव केवलं लभ्यम्' बालानां तातः इति तस्य विशेषेणाऽन्यतमं सार्थकमवश्यमेव ।

श्रीः

# दर्शनानि - न्यायदर्शनम्

**श्रीमद्भागवतं श्रीनिवासाचार्यः,** M. A. (न्याय)
न्यायशास्त्राध्यापकः, चिननिन्ड्कोलनु ।

अथास्मिन् निखिलमहर्षिजनपादस्पर्शपवित्रिते भारते देशे साङ्गाः वेदाः, मीमांसा, न्यानशास्त्रम्, अष्टादशपुराणानि, धर्मशास्त्राणि, चतुर्दशविद्याः, बहोः कालादारभ्य विराजन्ते । संस्कृतवाङ्मयपरिशीलने क्रियमाणे विद्यास्वरूपे विभागे च महान् विपरिणामः दृश्यते । स कश्चन कालः यत्र विद्याः चतुर्दश इति महर्षयः निर्णयं कृतवन्तः । तदनन्तरं अन्यासामपि विद्यानां- विद्यास्थानत्वस्य परिगृहीतत्वात् चतुर्दशाधिकानि - विद्यास्थानानि संबभूवुः ।

अत्र दर्शनं नाम तत्वज्ञानसाधनं शास्त्रम् । दर्शनपदञ्च पश्यन्ति अनेन इति व्युत्पत्त्या दृशिर् = प्रेक्षणे, इत्यस्मात् धातोः करणार्थकल्युट्प्रत्यये कृते निष्पन्नं भवति । इदञ्च दर्शनम् ऐहिकामुष्मिकसाधकत्वेनाऽपि कैश्चि दुक्तम् । यथा —

यदाभ्युदयिकं चैव नैश्रेयसिक मेव च ।
सुखं साधयितुं मार्गं दर्शये त्तद्धि दर्शनम् ।। इति

तानि च दर्शनानि प्रथमतः द्विधा विभज्यन्ते । आन्तरबाह्यभेदेन वा आस्तिकनास्तिकभेदेन वा । आस्तिकदर्शनानि- पूर्वमीमांसादर्शनम्, उत्तरमीमांसादर्शनम्, सारव्यदर्शनम्, योगदर्शनम्, न्यायदर्शनम्, वैशेषिकदर्शन ञ्चेति षट् । एतेषु न्याय-

दर्शनम् - सर्वप्रधानम् । श्रुतावपि दृश्यते प्राथम्य मस्य ।

"न्यायो मीमांसा धर्मसूत्राणि ॥" इति

अपि च, पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।

"वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति याज्ञवल्क्यस्मृता वप्युदाहृतत्वात् दर्शनस्यास्य प्राथम्यं स्मृतिकालेऽप्यवर्तत इति ज्ञायते ॥

दर्शनमिदं सर्वविद्योपयिकं, निखिलकर्मसाधनं अशेषधर्माश्रयञ्चेति भगवान् वात्स्यायनः आह —

प्रदीप स्सर्वविद्यानां उपाय स्सर्वकर्मणाम् ।
आश्रय स्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ इति

दर्शनस्यास्य कर्तृविषये बहवः मतभेदाः वर्तन्ते । पद्मपुराणे,स्कन्दपुराणे, गान्धर्वतन्त्रे, नैषधीयचरिते विश्वनाथपञ्चाननकृतन्यायसूत्रवृत्तौ च महर्षेः गौतमस्यैव कर्तृत्वं प्रतिपादितं दृश्यते । एवं न्यायभाष्ये न्यायवार्तिके, न्यायवार्तिकतात्पर्यटीकायां, न्यायमञ्जर्याञ्च न्यायसूत्राणां कर्ता अक्षपादः इति कथितं वरीवर्ति । अन्यत्र भासमहाकवेः प्रतिमानाटके 'न्यायशास्त्र निबन्धा मेधातिथिः' इति च उपवर्णितम् । एवञ्च गौतम, अक्षपादमेधातिथिरूपकर्तृत्रितयेन सम्बन्धः शास्त्रस्याऽस्य प्रतिपादितः दृश्यते । विमर्शकाऽस्त्वेवं मन्वते ।

"गौतमः, अथवा गोतमः इति नामभ्यां द्वे विभिन्नव्यक्ती अवर्तेताम् । तयोरेकः मेधातिथिः गौतमः अपरः अक्षपादः गौतमः । अनयोर्मेधातिथिः गौतमः एव न्यायशास्त्रस्य प्रथमः प्रवर्तकः । परन्तु तस्य न्यायसूत्राणि अध्यात्मप्रधानान्यासन् ।

ततः अक्षपादः गौतमः प्रमेयप्रधानप्राचीनशास्त्राधारेण प्रमाण प्रधानं नवीनं संस्करणरूपं न्यायदर्शनम् अरचयत्। तस्मिन्नपि अनेके प्रक्षेपादयः कृताः। तदेवेदानीं अस्माभिः पाठ्यमानं न्यायदर्शनम्" इति।

अस्य न्यायदर्शनस्य वात्स्यायनमहर्षिः भाष्यरूपं व्याख्यानमकरोत्। अर्थावबोधनसमर्थं तदेवेदानीं पण्डितैः आद्रियते। वाचस्पतिमिश्राणां - न्यायवार्तिकटीकायाः आरम्भे वात्स्यायनः दक्षिणात्यः इति काञ्चीनगरवासिनः तस्य पक्षिलस्वामी इति नामान्तरमस्तीति च दृश्यते।

पदार्थानां तत्वज्ञानजनकत्वेन रूपेण ऐहिकम् सर्वोत्कृष्टापवर्गसाधनत्वेन आमुष्मिकं सुखञ्च जनयतीति, सप्रयोजन मिदं न्यायदर्शनम् अवश्य मभ्यसनीयं विद्यार्थिभि राधुनिकै रपीतिसम्प्रार्थ्य विरम्यते।

मोहं रुणद्धि विमलीकुरुते च बुद्धिम्
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न तनुते क मिहोपकारम्॥



## मम्मटाचार्याणां कालस्य तथा वंशस्य विचारः

लेखकः – **नंडूरि सत्यनारायणमूर्ति**, काकिनाड - २

सर्वैः आलङ्कारिकैः शिरोधार्याः मम्मटाचार्याः। एभिः कृतः काव्यप्रकाशः नाम ग्रन्थः। साहित्यालङ्कारशास्त्रे, अत्युत्तमः, परमप्रामणिकश्च एषः ग्रन्थः। काव्यस्य सर्वाङ्गान्यधिकृत्य कृतः प्रथमः ग्रन्थः एषः एव। पूज्यानन्दवर्धनैः स्थापितः ध्वनिसिद्धान्तः व्यक्तिविवेककारेण राजानकमहिमभट्टेन तिरस्कृतः। परन्तु एतैः मम्मटाचार्यैः तं निराकृत्य पुनः ध्वनिसिद्धान्तः राद्धान्तीकृतः।

एतादृशानां प्रसिद्धाना मालङ्कारिकाणां वंशकालग्रन्थकर्तृत्व-विषयेऽपि, अन्यालङ्कारिककवीना मिव संदिग्धतैव। तामधिकृत्य यथामति किंचित् वक्तु मुद्युक्तोऽस्मि।

पण्डिताभिप्रायानुसारेण, एते मम्मटाचार्याः भोजोत्तरवर्ति-कालीनाः। दण्डिनं, राजशेखरं, भोजमहाराजं विना अन्ये प्रसिद्धसाहित्यालङ्कारिकाः सर्वे काश्मीरदेशीयाः एव। तथैव मम्मटाचार्याः अपि काश्मीरदेशीयाः। एषः विषयः तेषां नामधेये-नैव विदितः। किन्तु तेषां जीवनवृत्तान्तः न लभ्यते। काश्मीर-देशपण्डितानां परंपरागतप्रवादानुसारेण नैषधीयचरितस्य ग्रन्थ-कर्ता श्रीहर्षः एतेषां भागिनेयः एव। किन्तु केचिन्न श्रीहर्षः काश्मीरदेशस्थः इति।

काव्यप्रकाशस्याऽनेकानि व्याख्यानानि विलसन्ति। तेषु सुधासागरः एकतमः। तस्य कर्ता श्रीभीमसेनः। एतान् मम्मटाचार्या नधिकृत्य स्वव्याख्याने, इत्थ मवदत्।

# प्रकृत्या ज्ञाप्यमानः पाठः

ना. व. निगमान्तः, प्रोद्दूटूरु

पूर्वानुबन्धः

अचेतनादपि आकाशात् ज्ञातव्यांशो वर्तते चेतनानामिति अहो! प्रकृतिमहिमा !

अस्मद्देशं परितः मेखलाकारेण परिवृतो वप्र इव भूम्याः सन्दृश्यते सागरः । एतदीयं जलं लवणमयं पानानर्हमपि अस्मदावश्यकं लवणं अस्मादेव लभ्यते । समुद्रस्नानं पर्वणि कृतं पुण्यदायकं, व्याधिनाशकं चेति अभिज्ञा वदन्ति । अतिगभीरोयं समुद्रः नौकागमनसाधनत्वात् धनोत्पादकः देशान्तरप्रापकश्च अस्ति । अनर्घाणां मणीनां आकरोयं विदेशीयेभ्यः शत्रुभ्यः अस्मद्देशं रक्षितुं शक्नोति । सागरान्तस्थानि मुक्ताफलानि यत्नतः आदाय जनाः तानि शोभायै आभरणेषु संयोजयन्ति । बलवत्तरैः यादोभिः पूरितोपि कदापि कालुष्यं न याति । उग्रातपे - अतिवृष्टौ वा सर्वदा समानो वर्तते, न विकृतिं गच्छति । सागरसमीपवासिनः सायं तत्तीरं प्राप्य तदुत्थं शुद्धं वामु मासेवन्ते । अस्मात् ज्ञातव्यो विषयः अयमेव ।

यथा समुद्रः जीवमण्डलमण्डितोपि, बडबाग्निना तप्यमानोपि न कलुषो भवति, नापि क्षीणतां एति, सदा निर्मलः गम्भीरश्च चकास्ति, तथा जनैरपि सुखे, दुःखे, विपदि वृद्धौ च न मनोविकारः प्राप्यः, चित्तशुद्धिरेव प्रधाना, सतां हृदयमप्येव मेव स्यात् । आश्रितरक्षणं प्रथमं कर्तव्यं अस्मदीयं इति एवं लोके पर्वताः नाना-

विधाः लक्ष्यन्ते । केचनोन्नताः अपरे नात्युन्नताः । अन्ये दीर्घाः पाषाणदिविषमाश्च । अत्रैव पापनाशिन्यः प्रसिद्धाः महानद्यः उद्भूय प्रवहन्ति, पर्वतीयाः पाषाणाः देवालयभवनादिनिर्माणाय बहु उपयुज्यन्ते । अधित्यकास्तु अतिविशुद्धा इत्यस्मादेव कारणात् देवमन्दिराणि बहूनि तत्रैवस्थापितानि । अत्युन्नताः एते जलभरितान् मेघान् स्वशिखरैः निरुध्य स्वोपत्यकाः वृष्टिसहिताः कुर्वन्ति । हिमालयस्तु अस्मद्देशीयं उन्नतं प्राकारकुडयं इव उत्तरस्यां दिशि राजते । सर्वदा हिमच्छन्नोपि अयं तत्र तत्र स्थितैः प्रकृतिजैः उष्णोदकतटाकैःतत्रत्यानांजनानां शैत्योत्थां ज्वरादिबाधां उष्णोदकदानेन हितैषिणी मातेव अपाकरोति । शैत्यभूयिष्ठे स्थले उष्णोदकविशिष्टाः तडाकाः ! अहो प्रकृते र्महत्वं ! पर्वतीयगुहासु अनन्ताः सरीसृपाः निश्शङ्कं जाग्रति । सिंहाः व्याघ्राश्च निवसन्ति । भिल्लाश्च असङ्कचाकाः स्वैरं जीवन्ति — एवंविधाः महीधरा अपि कमप्यंशं ज्ञापयन्ति पर्वता इव सतां मनांस्यप्युन्नतानि। ते यथा वृष्टयुत्पादनद्वारा सत्वाश्रयत्वेन च उपकुर्वन्ति तथा जनैः उन्नताशयवद्भिः परोपारिभिश्च भाव्यं, विपत्तौ सम्पत्तौ च मनसः स्थिरता आवश्यकी, "दूरस्थाः पर्वताः रम्याः"इतीव मूर्खा अपि लोके रमणीयदर्शना भवन्ति, परिचये सति तदीयं स्वाभाविकं रूपं ज्ञायेत इति । गङ्गायमुनाद्याः पुण्यनद्यः — स्नानमात्रेण स्नातृनिष्ठं पापं दूरीकुर्वन्ति । इमाः देशे सर्वत्र कुल्याद्वारा प्रवहन्त्यः जलसेकेन नानाविधानि सस्यान्युत्पाद्य लोकं तर्पयन्ति । तत्र तत्र सेतुबद्धे नदीजले अत्युपयुक्तां विद्युतमप्युत्पादयन्ति वैज्ञानिकाः । नदीजलप्रवाहेण सिक्तः मरुरपि कालक्रमेण सस्यश्यामलो दीप्यते। नद्यन्तस्थितानां सारवतां कर्दमानां संयोजनेन सस्यादिकं द्विगुणितं फलं प्रयच्छति ।

[ अनुवर्तते ]

श्रीः

# पुनः प्रभावः प्रखरो विधेयः



सद्ज्ञान विज्ञान विभासितान्तः
त्रैलोक्य तत्त्वेक्षण सिद्धहस्तान् ।
सारस्वतालौकिक — गीतगाने
मग्नान् सदा वो मनसा स्मरामि ॥ ॥ १ ॥

यूयं त्रिलोकीविदितार्थसाराः, अन्तः प्रकाशाखिल – दृष्टलोकाः
धर्मप्रतिष्ठाधिगतावतारा नमो भवद्भ्यः सुर - वाक् - कविभ्यः॥२॥

वीणा हि वाण्या मुखरीकृता कैः ?
व्यासः क्व तेनेऽथ महत् स्वकाव्यम् ?
क्व प्रादुरास प्रथमः कवि र्वा
तत्संस्कृतं संस्कृतमेव वच्मः ॥ ॥ ३ ॥

राष्ट्रस्य रक्षाय च तस्य शिक्षा चारित्र्यरक्षाप्यथ भारतीया ।
सर्वेऽप्यमी संस्कृतपण्डितानां समाश्रयेणैव विकासमाप्ताः ॥ ४ ॥

एते समस्ता यदि वर्तमाने शैथिल्य माप्ता बत भरते नः ।
दोषो ह्यसौ संस्कृतपण्डितानां जाताः स्वयं ये पतिताः स्वधर्मात् ॥५

का नाम शक्ति र्न विलक्षणा प्राक् उद्बोधिताऽभूदिह तैः सदैव ।
असंस्कृताः साम्प्रत मात्मदीना मान्या न ये पूर्ववदद्य सन्ति ॥ ६ ॥

न गर्जनं तत् नच तर्जनं वा जागर्ति तेष्वद्य कृते खलानाम् ।
ये भर्त्सनीया न च भर्त्सिता स्ते भवन्ति भूयोऽद्य रुषा हि तेषाम् ॥

प्रभावशून्यै स्तपसा विहीनैः पुनः प्रभावः प्रखरो विधेयः ।
येन स्वयं राष्ट्रजनाः समस्ताः शृण्वन्तु तेषां स्वहिताय वाचम्।।८।।

राष्ट्रस्य चरित्र्य-विशोधिनी च स्मृति र्नवा तैः पुन रद्यलेख्या ।
मृतोपमै मौनपरैकचित्तै र्दायित्वशून्यै र्न फल च भाव्यम् ।। ९ ।।

त एव सन्नेतृपदं कृतार्थं कर्तुं हि योग्या जनमानसज्ञाः ।
स्वार्थैकसिद्धौ निरता हि नान्ये केचित्स्वराष्ट्रस्य गतिं विदन्ति।।

उत्सादयित्री द्विषतां समूलम्
चाणक्यनीति र्जयिनी जगत्याः ।
नागार्जुनाद्या अमरत्वसिद्धा
स्तेष्वेव जाताश्च पुन र्भवेयुः ।।          ।। ११ ।।

राजस्थानसाहित्यसंगमद्वारा बीकानेरस्थहिन्दीविश्वभारत्या स्तत्त्वावधाने समायोजितस्य संस्कृत सम्मेलनस्यान्तर्गते कवि सम्मेलनेऽध्यक्षपदात् संस्कृतकवीनां सेवायां समर्पिता विद्याधर —

पद्यकुसुममाला ।

हिन्दी विश्वभारती. बीकानेर,
२२-१२-७४.



# अन्धकारमीमांसा

जे. शेषाद्रि अय्यंगार्,
न्यायाध्यापक: S. V. प्राच्यकलाशाला, तिरुपति ।

[ पूर्वानुबन्धः ]

भगवद्रामानुजीयाः पुनः तेजोद्रव्यस्य प्रभावात् आत्मनः अपृथक्सिद्धविशेषणं द्रव्यं स्वयंज्योतिषः प्रभारूपं ज्ञानं वदंति । यथा कुम्भोदरनिहितदीपस्य प्रभा संकुचति; एवं चेतनस्य धर्मभूतज्ञानमपि कर्मणा संसारदशायां संकुचितं भवति । तदा तस्य विषयैः असंबन्धः यः भवति स एव अस्माकं अज्ञानरूपः अन्धकारः इति मन्यन्ते । अयमन्धकारः कीदृशरूपोपि भवतु । किंतु सर्वथा निरसनीय एव । शास्त्रमयेन प्रदीपेन अमुमंधकारं आचार्याः हृदयगह्वरात् उपदेशद्वारा निराकुर्वन्ति । अत एव ते गुरुशब्देनाभिधीयन्ते । "गुशब्दस्त्वंधकारः स्यात् रुशब्दः तन्निरोधकः" इति गुरुशब्दस्य वैदिकर्विचन दर्शनात् "गुं रुणिद्ध" इति गुरुरुच्यते । किं च, कदाचित् भगवानेव स्वयं गुरोः भूमिकां भजमानः चेतनान् उज्जीवयितुं तेषां अज्ञानतिमिरं अपनोदितुं च दयया शास्त्रमयं "गीता" ऽऽदि रूपं प्रदीपं आरोपयति । भगवतो दयां अष्टोत्तरशतेन श्लोकैः अभिष्टुवन्तः वेंकटनाथसूरयः मध्ये —

"अनुगुणदशार्पितेन श्रीधरकारुणे समाहितस्नेहा । शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ।।"

इति श्लोकेन उक्तमर्थं अन्वगृह्णन् । अतः अस्मादृशैः तितीर्षुभिः शास्त्रज्ञानमयं ज्योतिः संपादयितुं तेन च हृदयगुहान्धकारं अज्ञानं दूरीकर्तुं च सद्गुरु-

शुश्रूषया संस्कृतमयः वाग्विभवः समार्जनीयः इति निपुणाः पुरुषाः प्रवदंति ।

इतः परं इदानीं बाह्यान्धकारस्वरूपमधिकृत्य परामृष्टुं उद्युङ्क्ते अयं जनः। तिमिरान्धकार तमिस्त्रतमःप्रभृतिशब्दै "नीलं तमः चलति" इति चाक्षुषसाक्षात्कारेण च परामृश्यमानोऽन्धकारः दार्शनिकानां अपि वैमत्यहेतुः अभवत् ।

तत्र न्यायवैशेषिकशास्त्रकृदः तमसः प्रौढप्रकाशतेजःसामान्याभवरूपतां आतिष्ठन्त इति तत्त्वचिन्तामणिमारभ्य तर्कसंग्रहदीपिकापर्यन्तं ग्रन्थेषु सर्वजनविदितमेव। मीमांसकाः परं तमसः द्रव्यत्वमेव आस्थाय तस्य न्यायविद्भि रंगीकृतेभ्य नवभ्यः द्रव्येभ्यः अधिकतया दशमद्रव्यत्वं अङ्गीकुर्वन्तीति तन्मतखण्डनावसरे ज्ञायते ।

वैशेषिकसूत्रेषु कणादमुनिकृतेषु पञ्चमाध्यायद्वितीयाह्निके प्रासंगिकं तमसः स्वरूपं "द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाभावस्तमः" इति सूत्रेण दर्शितम् । यदि तमः द्रव्यमिति स्वीक्रियेत तर्हि तत् अनित्यं सावयवं च आस्थेयम् । निरवयवस्य नित्यस्य विभोः चलनाऽसंभवात्; चलतीति प्रत्ययानुपपत्तेः । तस्याणुत्वेतु अणूनां अतीन्द्रियतया तत्साक्षात्कार एव न घटेत । तत्र च तस्यास्पर्शतया पार्थिवाप्यतैजसवायव्यावयवैः निष्पाद्यता न संभवति। तेषां चतुर्णां स्पर्शवच्चतुष्टयमित्यपि शास्त्रसंकेताच्च । किं च यदा प्रदीपमपसरति तदैव तमः उत्पन्नं इति वाच्यम् । तस्य तदैवोपलभ्यमानत्वात् । एवं च तदानीं समवाय्यसमवायि निमित्तकारणानां सांनिध्यस्य अनुलंभात् कथं तदुत्पत्तिः प्रामाणिकीति विश्वसिमः? एवं, लोके किमपि रूपवत् द्रव्यं नरैः विना आलोकसंबन्धं गृहीतुं न हि शक्यते । तमस्तु न तथा । मार्जार - शार्दूलोलूक - फणि - राक्षस - प्रभृतयः कामं

(अनुवर्तते)

# श्रीरंगन्नमहाशयः

मेडवरं मल्लिकार्जुनशर्मा, लेपाक्षी ।



श्रीरामश्रीकृष्णादिदिव्यपुरुषाः स्वदेहत्यागानंतरमपि पुनः अनेकत्र अनेकशः शरीराणि धृत्वा, अतिमानुषकार्याणि चक्रुरित्यस्माभिः प्रायशः श्रूयते । श्रीरामः तुलसीदास, भद्राचलरामदास, बम्मेरपोतन, त्यागराजादिभक्तेभ्यः, श्रीकृष्णः मीरादेवी, सूरदासादिमहद्भ्यश्च दर्शनं दत्वा, अनेकान्यद्भुतान्यकुर्वन्निति च श्रूयत एव । एतत्सत्यं वा ? केवलं कल्पितं वेति अधुना बहूनां संदेहः सामान्यतः जायत एव । तुलसीदाससूरदासादयः अद्य न सन्ति । अत स्तेषां प्रत्यक्षसाक्षित्व मस्माक मलभ्यमेव । 'न मे भक्तः प्रणश्य'तीति गीताचार्यवचन मनुसृत्य भक्तानां कदापि नाशो न भवंतीति ज्ञायते । भक्त्याः प्रभावं सूचयन् यत्र कुत्रापि भक्तः अवश्यं भवत्येव । परंतु तेषां जीवनकाले ते प्रजाभिः उपेक्षिता भवंति । श्रीरामचन्द्रः अवतारपुरुष इति तस्मिन् काले विश्वामित्रः, वशिष्ठः, अपि चान्ये तपोधना एव जानंति, नेतरे । इदमेव विश्वामित्रेण प्रतिपादितं 'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् । वशिष्ठश्च महातेजा येचान्ये तपसि स्थिता' इति (बालकांडे अ. १९ - श्लो. १४) । भद्राचलरामदासः तादृङ्महाभक्तः इति तस्य मातुलाभ्या मक्कनमादनाभ्यामपि न ज्ञातः । अद्य विद्यमानं रामनामस्मरणेन श्रीरामचंद्रस्य साक्षात्कारं लब्ध्वा, श्रीराचंद्रेण यदेष्टं, यथेष्टं च संभाषणादिकं कुर्वन्तं कंचन महात्मानं प्रति विज्ञापयितु मिच्छामि ।

तस्य व्यवहारनामधेयं 'रंगन्नबाबुगारु' इति। तस्य मातृभाषा आन्ध्रभाषा। पितरौ जालम्मापुल्लय्याभिधौ। आर्यवैश्यकुले समुत्पन्नः। मिथुनकुल (मैत्रेयस) गोत्रोद्भवः। तस्य बाल्यं पश्चिमगोदावरीमण्डले एलूरुपत्तने अभवत् अधुना स महाशयः गुंटूरुपत्तने वसति। अद्य षडशीतिवर्षातिक्रान्तोऽपि प्रायसः अनुदिनं क्रोशद्वयं पादचारी भूत्वैव गच्छति, न कदापि त्रिचक्रशकटादिकमारोहति। एकदा अस्य पिता एनं समीपमाहूय 'वत्स! मम अन्त्यदशा संप्राप्ता। मम वांछां त्वं पूरय। अस्माकं कुलदैवं कोदण्डरामः। अस्मद्गुरुः श्रीवीरब्रह्मेन्द्रस्वामी। अत स्त्वमस्माकं कुलदैवस्य श्रीरामचन्द्रस्य नामस्मरणं कृत्वा स्वयं तीर्त्वा, तारय। अयमेव ममांतिमाभिलाष' इत्यब्रवीत्। रंगन्न-महाशयस्य संप्राप्तं पैतृकं धनं रामनाममेव। न भूमिः। न च सुवर्णादयः। हरिमाश्रयेति यो जनकः पुत्राय बोधयति स एव जनक' इति प्रह्लादवचनस्य समुचितं खलु श्रीरंगन्नस्य जनकः।

यथा पूर्वेषां भक्तानां जीविते कष्टपरंपरा, तथा श्रीरंगन्नस्य जीवितेऽपि असंख्याककष्टानि संवृत्तानि। तेषु दुर्भरदारिद्रचस्य चक्रवर्तित्वम्। श्रीरंगन्नमहाशयः एलूरु, चीराल, गुंटूरुपत्तनेषु प्रातःकाले घण्टाचतुष्टयवादनकालमारभ्य, रात्रौ नवघण्टाताडन-पर्यन्तमपि जलघटान् संवाह्य, तेन सप्राप्तेन स्वल्पेनैव धनेन बहुसंख्याभरितं स्वकुटुम्बं जलेन वा लवणेन वा यथाकथंचित्पोष-यामास। जलघटसंवाहनसमयेऽपि जनकस्य हितोपदेशमनुसृत्य, सर्वदा अन्यालोचनां विना रामनामस्मरणं चकार। तत्फलमिव कस्मिंश्चित्काले अतीते स्वयं श्रीरामचन्द्रः प्रत्यक्षीभूय एवमवदत्।

[ अनुवर्तते ]



# श्रीरामानुजाचार्यः

**"अबरः"**

[पूर्वानुबन्धः]



आ – दुष्ट ! धृष्टोऽप्यसि ! गोपनीय मिमं महामन्त्रं सर्वेभ्यः प्रकटीकृत्य अपवित्र मकार्षीः । नैतावन्मात्रं, प्रत्युत पञ्चमेभ्योऽप्युपदिश्य त्वया पापिन् ! पापात् पापतरं कृतम् ।

रा – पवित्राणां पवित्रं यत् तन्मूलभूतं तिरुमन्त्रं कोऽप्यपवित्रं कर्तुं न पारयति । किञ्च सभक्तिश्रद्धं बहुभि रुच्चरितत्वात् मन्त्रस्य पवित्रता बहुगुणिताऽसीत् ।

आ – "गुरुजन मवजानन् प्राज्ञ इव मुख मस्तीति भाषसे किं दुरहंकारिन् ।" इति गोष्ठीपूर्णः साग्रहोदग्र मभाषत ।

रा – "ज्ञानवयोवृद्धा स्तत्र भवन्तः । क्षमार्होऽयं जनः" इति प्रशान्तमधुरं विनीतः प्राह । "न क्षमा, नैव क्षमा; घोरात् घोरतरं पापं कृतं त्वया । तस्य निष्कृति र्नास्ति । मूलमन्त्रोऽपवित्रीकृत स्त्वया । तत्फलं त्वयाऽवश्य मनुभोक्तव्यम् । रौरवादिनरकप्राप्ति स्तेऽनिवार्या" इति वदन्नेव सरोषं गोष्ठीपूर्ण स्ततः प्रस्थितः ।

## ६. शिष्यसन्ततिः —

यद्यपि गोष्ठीपूर्णः देवालयगोपुरप्रदेशात् रोषकषायिताक्षस्सन् गृहं प्राप्तः; तथाऽपि गृहे प्रशान्तचित्तसंक्षोभो यदा रामानुजं द्वार्युपस्थितं आत्मानं प्रसादयितुं मधुरोदारभाषणे प्रवृत्तं अपश्यत्

तदा नून माचार्यः रामानुजस्य हृदयनैर्मल्यं उदारोदात्तभावगाम्भीर्यं भक्तिपारवश्यं च मनसा श्लाघमान एव आसीत्। रामानुजस्य भक्तिपुरस्सरै रनुनयवाक्यैः प्रसन्नमानसः आचार्यः शिष्यं प्राह —

"रामानुज! नाऽहं रुष्ट स्त्वदीयकृत्येन; इदानी मतीव सन्तुष्टोऽस्मि। "त्यागे नैकेनाऽमृतत्व मानशुः" भविष्यद्घोरनरकमप्यविगणय्य ते प्रवृत्ति र्लोकहितैषिणी किल समपद्यत। अत स्त्वया प्रबोध्यमानस्य वैष्णवमतस्य इतः परं "रामानुजदर्शन" मिति प्रसिद्धि र्भविष्यति" —

इत्येवं सानन्द वदन् गोष्ठीपूर्णः रामानुजं आशींषि प्रयुज्य प्राहिणोत्।

श्रीरामानुजस्य कीर्ति र्दिगन्तव्यापिनी बभूव। बहवः शिष्यास्त माचार्यं समाश्रयन्। तेषां श्रीवत्साङ्कमिश्रः प्रमुखः; यस्य सुतयोः पश्चात् पराशरस्य वेदव्यासस्य च उपकारस्मरणार्थं "व्यासभट्टः, पराशरभट्टः" इति नाम कृत्वा रामानुजः यामुनाचार्यस्य अभिलाषाणां त्रयाणां एक मपूरयत्।

कूरनामके (कूरम्) ग्रामे कूरेशो नाम धनी कश्चि दासीत्। स युवा बुद्धिमा नुत्साही च। प्रप्रथमं स रामानुजस्य उपदेशान् कर्णे नाकरोत्। अन्ते तस्यैव महात्मनोऽन्तेवासी बभूव। अयमेव पूर्वोक्तः श्रीवत्साङ्कमिश्रः। अस्य कूरत्ताळ्वान् इत्यपि नामान्तरम्।

एव मेव दाशरथि र्नाम युवा रामानुजस्य शिष्यो बभूव; यस्य "मुदलियाण्डान्" इति द्राविड्यां नामान्तर मप्यस्ति। काञ्चीपुरात् पूर्वस्यां दिशि "पूरुषमङ्गल" नामके ग्रामे अनन्तदीक्षितो नाम कश्चिद् ब्राह्मणः रामानुजस्य भगिनीं उपयेमे। तयोर्दम्पत्योः सुत एवाऽयं दाशरथिः भागिनेयो रामानुजस्य।

तृतीयो गोविन्दमिश्रः। स रामानुजस्य सन्निहितबन्धुरेव। अथापि स शैव आसीत् पूर्वम्। स महान् साधुस्वभावः बुद्धिमान् उद्यमी च। तं कथंचित् वैष्णवमते आक्रष्टुं रामानुजेन महान् प्रयत्नः कृतः। गोविन्दमिश्रः काळहस्तिनगरवासी। अत श्शैवं तं कथंचित् वैष्णवं कर्तुं रामानुजः तिरुपतिनगरे निवसन्तं निजमातुलं श्रीशैलपूर्णं (तिरुमलनम्बि) अभ्यर्थयामास। श्रीशैलपूर्णः तिरुमलनिवासीति हेतुना "तिरुमलनम्बि" इति द्राविड्यो व्यवहारः। स वैष्णवाग्रणीः रामानुजं स्वगृहे संवत्सरपर्यन्तं रामायणं सव्याख्यान मबोधयत्। वैष्णवमतं यामुनाचार्यसिद्धान्तं चाधिकृत्य रामानुजं अवबोधितवा नासीत्। तादृशं स्वाचार्यमेव गोविन्दमिश्रं वैष्णवं संस्कर्तुं रामानुजः प्रार्थयामास। एवं प्रार्थितः श्रीशैलपूर्णः काळहस्तीश्वरालयं गत्वा तत्रत्ये मण्टपे उपविश्य "तिरुवाय्मोळि" नामकस्य द्राविडप्रबन्धस्य व्याख्यानं कुर्वन्नासीत्। आलयमागतः गोविन्दमिश्रः श्रीशैलपूर्णं दृष्ट्वा" किमिदं भवता विरच्यते? इत्यऽपृच्छत्। "यदि मदीय मुच्यमानं वाक्यं श्रोष्यसि तर्हि इदं सर्वं विरच्यमानं श्रावयिष्यामि" इत्याह श्रीशैलपूर्णः। तथे त्यङ्गीकृत्य गोविन्दमिश्रः "तिरुवाय्मोळि" दिव्यप्रबन्धस्य व्याख्यानं श्रीशैलपूर्णात् अश्रौषीत्। तच्छ्रवणानन्तरं गोविन्दमिश्रः वैष्णवोऽभवत्; श्रीशैलपूर्ण मनुसृत्य तिरुपतिनगर मागतः। इयं सुवार्ता यदा श्रीरङ्गे विराजमानाय रामानुजाय प्रेषिता तदा सोऽत्यन्तं मुमुदे।

एवं शैवा अपि वैष्णवा भूत्वा रामानुजस्य शिष्या भवितु मारेभिरे। दिने दिने रामानुजस्य शिष्यसन्ततिः प्रवर्धमानाऽऽसीत्। यामुनाचार्यसिद्धान्तैः शोभितं वैष्णवमतं तदीयशिष्यैः स्वाचार्यभूतैः पेरियनम्बि (महापूर्णः) तिरुमलनम्बि (श्रीशैलपूर्णः) तिरुकोट्टियूर्नम्बि (गोष्ठीपूर्णः) प्रभृतिभिः प्रवर्तितं, स्वयं शिष्य

प्रशिष्यै स्सह सर्वेभ्यो जनेभ्यः प्रबोधयन् श्रीवैष्णवमतप्रतिष्ठापनाचार्यत्वेन श्रीरामानुजः प्रसिद्धि गतः श्रीरङ्गे ।

**७. बिषान्नम् —**

श्रीरामानुजः सर्वलोकानुजिघृक्षया गोष्ठीपुरे तिरुमन्त्रस्य यदा बहिरङ्गोपदेश मारभत ततः प्रभृति शिष्यसन्ततिः प्रवर्धते स्म। तयैव घटनया रामानुजस्य कीर्ति र्दिगन्तव्यापिन्यासीत् । यथा यथा वैष्णवमतप्रवर्तकस्य रामानुजस्य प्रशस्ति र्विश्रुताऽऽसीत्तथा तथा शैवानामसूयाद्वेषादिकं प्रवृद्धमासीत् । वर्णाश्रमविभेद वा लिङ्गवयोविभेदं वाऽगणयन् रामानुजः सर्वेभ्योऽप्युपदेशं कुर्वन्नासीत्। एतावत्पर्यन्तं हि यत् पञ्चमजातिजनेभ्योऽपि सरहस्यमन्त्रोपदेशः कृतो ननु तेन ! अतः वैष्णानामेव केषांचि दिद मरुचिकर मासीत्। एवं च अवैष्णवा इव वैष्णवा अपि रामानुजस्य कीर्ति मभ्यसूयन्तो यथाकथंचित्तं पराभावयितु मवकाशं प्रतीक्षमाणाः स्थिताः ।

किञ्च, श्रीरङ्गदेवालये रामानुजः पाञ्चरात्रागमविधानेन भगवदाराधनप्रक्रियां प्रवेशयामास । ततः पूर्वं यामुनाचार्यकाले वैखानसागमविधानेन आराधनं क्रियामाण मासीत् । अनेन नूतनाराधनविधानेन बहवो रामानुजस्य विरोधिनोऽभवन् । तेषां प्रमुखः आलयप्रधानार्चको भृङ्गाचार्यः । स रामानुजस्य व्यतिरेकप्रचारं कर्तुमारेभे । "प्राचीन मर्चनाविधान मेव श्रेष्ठम्; रामानुजेन इदम्प्रथमतया प्रवेशितं अर्चनाविधानं सम्प्रदायविरुद्धम् । सम्प्रदायसिद्ध आचारं परित्यज्य नवीनविधानेन अर्चने भगवदपचार एव आपतति । अपि च रामानुजः यामुनाचार्यात् कया विधया श्रेष्ठः ? महात्मना यामुनाचार्येण नैवं - विध मर्चनाविधानं प्रवर्तितम् । अतः रामानुजोक्तविधिना देवालये भगवदाराधनं न विधेय" मित्याक्षिपन्नासीत् भृङ्गाचार्यः ।

[ अनुवर्तते ]

## FORM IV

*(See Rule 8)*

| | |
|---|---|
| Place of publication | Samskritha Bhasha Pracharini Sabha, Chittoor 517001 |
| Periodicity of its publication | Monthly |
| Printer's Name | T. K. Thiruvengadacharyulu |
| Whether citizen of India | Yes |
| If Foreigner, State the country of origin | —— |
| Address | Vijaya Press, Chittoor. 517001 |
| Publisher's Name | N. Ramanatha Aiyar B.A.B.L. |
| Whether citizen of India | Yes |
| If Foreigner, State the country of origin | —— |
| Address | N. Ramanatha Aiyar B.A.B,L. 17—4—7, Sundara Iyer St., Chittoor 517001 |
| Editor's Name | M. Varadarjam Panthulu |
| Whether citizen of India | Yes |
| If foreigner, State the country of origin | —— |
| Address | C/o Vijaya Press, Janda Street, Chittoor517001 |
| Names and Addresses of individuals who own the news paper and partners or Shareholders holding more than one per cent of total capital. | Samskritha Basha Pracharini Sabha, Chittoor 517001 |

I, Ramanatha Aiyar hereby declare that the particulars given above are true to the best of my knowledge and belief.

Chittoor,
28—2—75.

**(Sd) N. Ramanatha Aiyar,** B.A.B.L.
*Signature of publisher.*

Please mention your membership Number for
easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५–००



## प्रहेलिके



तरुण्यालिंगितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां संनिधानेऽपि कः कूजति मुहुर्मुहुः ॥

[ कुम्भः ]

कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥

[ लेखनी ]



Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor, (A. P.) C. 1500.

